दूरध्वनिः – "संस्कृतम्"

वाणी भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका


संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२ | 15 th JUNE 1974 | क्रमांकः ६


संस्कृतग्रन्थप्रदर्शनाविष्करणम्

श्री आर्. सुदर्शनं, एम्. ए., प्रदर्शनमाविष्करोति


आनन्द-ज्येष्ठाङ्कः | शकाब्दाः १८९६ | मूल्यम् ०–५० पैसाः

# विषयसूची

# दैवी वाक्

अग्निः पूर्वेभि ऋषिभि रीड्यो नूतनै रुत ।

स देवाँ एह वक्षति ।

अयमग्निः पूर्वेभिः = पुरातनैः भृग्वंगिरः प्रभृतिभिः ऋषिभिः, ईड्यः = स्तुत्यः, नूतनैः उत = इदानीन्तनै रस्माभिरपि स्तुत्यः । सः = अग्निः स्तुतस्सन्, इह = अस्मिन् यज्ञे, देवान् = हविर्भुजः, आ वक्षति = आ वहतु ।

# सम्पादकीयम्

## देशोऽयं क्षोभरहितः

अस्मद्भारतेऽयं संप्रदायः यत्प्रत्यहं सन्तः सर्वेश्वरं भगवन्तं प्रार्थनासमये सन्ध्यासमये वा नानाविधैः स्तोत्रैः स्तुवन्ति; शुभानि च बहूनि बहुभ्यो बहुधा काङ्क्षन्ते च इति। यत्राऽयं सुश्लोकः बहुप्रसिद्धः स्मर्यते सर्वैः शिष्टैः– "स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः; गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोका स्समस्ता स्सुखिनो भवन्तु" इति। "काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः, इति च।

लोकतन्त्रात्मके अस्मदीय भारतानुशासने लोकानां समस्तानां प्रेयः श्रेयश्च अनुदिन मभिलष्यते, तदनुकूला देशीयस्थितिगतयश्च अभिलष्यन्ते। सस्यशालित्वं यथा देशसौभाग्यस्य अभीप्सितं तथा क्षोभराहित्यमपि ततोप्यधिकं अभीप्स्यत इति नैत्र विप्रतिपत्ति अभीप्सिततमानां अन्यतममिति न, किन्तु अत्यन्तं प्रामुख्यं भजति इदं क्षोभराहित्यं नाम। सकलैश्वर्यसम्पन्नोऽपि देशः यावन्नक्षोभरहितो भवति तावत्समन्दभाग्यं इत्येव मन्तव्यम्। अशांतिः, सक्षोभः, सघर्षः, कार्यबन्धः, राजकीयविद्वेषः, एतन्मूलरक्तपातः इत्यादिकं यावत्पर्यन्तं वर्तते अनुवर्तते च तावत्पर्यन्तं प्रजाभ्यः स्वस्ति" इत्येष दिवा स्वप्न एव।

अतः सर्वकारस्य प्रादेशिकस्य केन्द्रीयस्य च इदं समष्टिगतं उत्तरदायित्वं भवति यत् देशे प्रदेशे च शान्तिभद्रतासंरक्षणं सर्वथा विधातव्य मिति। इदानीन्तनकाले देशस्य अशान्तिः संक्षोभश्च

अशिक्षितेभ्यो जनेभ्य एव भवतीति न नियमः। प्रत्युत शिक्षिता एव जनाः केचित् क्रमशिक्षणविधानं बिस्मृत्य स्वयं, विस्मार्यचान्यैः देशक्षोभाय प्रवर्तन्ते, प्रवर्तयन्ति च जनान्। पदे पदे कार्यबन्धास्त्रं प्रयुञ्जते। स्वाभीप्सितसिद्धयर्थं अनशनं साधयन्तो बाला इव सुशिक्षिता अप्येते जनाः निजवर्गीय योगक्षेमलाभाय कार्यबन्धास्त्रं पुनः पुन प्रयोक्तु न संशय माविशन्ति। अस्यामवस्थायां कथं स्वस्ति प्रजाभ्यः, कथं वा न्याय्येन मार्गेण परिपालनं, ऊहितुं शक्यते ?

अतः लोकतन्त्रात्मकं अनुशासनं अंगीकृतवति भारतदेशे अस्मदादीनां बहूनां जनानां विविधानां कर्मचारिवर्गाणां परिपालकवर्गाणां राष्ट्रीयं योग - क्षेम मभिलषतां मेधाविवर्गाणां च इद मनुदिन मनुसन्धेयं भवति यद्देशोऽय मस्मदीयः सदा क्षोभरहितोऽस्तु, निरुपद्रवोऽस्तु इति। न केवल मेतस्मरणमात्रं पर्याप्तं; अपितु तदनुकूलाः प्रयत्ना एव स्वीकर्तव्याः; प्रतीपप्रवृत्तयो दूरीकर्तव्याः। किं च लोकतन्त्रात्मके परिपालने समस्ताना मेव जनानां संक्षेमं श्रेयश्च अभिलषितं, न केवलं द्वित्राणां राजकीयपक्षाणां आहोस्वित् पञ्चषाणां वर्गाणां वा। अतो हेतोः स्वस्ववर्गयोगक्षेमं अभिलषन्तो यदि समष्टियोगक्षेमाविरुद्धं तद्भावयेयु स्तर्हि ते नून प्रशंसार्हा भवेयुः; तदीयवर्गस्यैव न किन्तु समस्तस्य भारतस्यैव योगक्षेमं दृढीकृत स्या त्तैः। स्वार्थापेक्षा परार्थं यावन्न-हन्ति तावत् तदीय स्वार्थसाधन नोद्वेजक भवेदितरेषाम्। प्रजासौकर्याय समारब्धा सेवायोगाः यदि सेवाभावायताः केवलं स्वार्थमात्रचिन्तनपरा भवेयु तर्हि तेषां चेष्टितं जनमतविरुद्धमित्येव भावना सुदृढा व्याप्नुयात्। अतः सेवायोगा स्वस्वपरिधीन् सम्यगवेक्षेरन्। स्थिताधिकं सौकर्यं अभिलषतां इदमवश्यं मनसि धर्तव्य यत् वय कानपेक्ष्य निहीनाः स्मः एव उन्नताश्च स्मः इति। न हि सर्वे सर्वहीनाः सर्वोन्नता वा भवन्ति, अथ भवितुमर्हन्ति वा। एवं सति स्वस्मात् हीनान् दृष्टवा तृप्तिः साधयितुं शक्या न तु उन्नतान् दृष्ट्वा। अधिकारितारतम्यं यावद्दूरीकर्तुं न

शक्यते तावदयं निम्नोन्नतभावोऽप्यनिवार्य एव। तत्र का परिदेवना? विद्यमाने तृप्तिमलभमानैः अधिकमभिलषद्भिः समानतन्त्राः सेवायोगाः समानप्रतिपत्तिका स्सोदरा वा जनाः कुतो न दृष्टिपथं नीयन्ते? सेवायोगाः सम-विषम-भावस्य सामञ्जस्य पूर्णं समन्वयं यदि वाञ्छन्ति तर्हि तेषां सर्वकारेण साकं संघर्षस्यैव नास्त्यवकाशः।

अस्मिन् विषये सर्वकारोऽपि सेवायोगानां आपेक्षिकं प्रामुख्यं निश्चित्य चेत्तदीययोगक्षेमनिर्णये प्रवर्तेत काले काले तर्हि एवं घटमानाः देशक्षोभकराः उपद्रवाः न संभवेयुः, अतः देशक्षोभस्य अतृप्ताः सेवायोगा एव न कारणं अपि तु सर्वकारोऽपि इति निश्चप्रचम्। समयानुसारेण यथोचितनिर्णयैः सेवायोगानां योगक्षेमनिर्वाहप्रकटन सर्वकारोऽवश्यं कुर्यात्। समानतन्त्राणां समानप्रतिपत्तिकानां वा सेवायोगानां मध्ये तारतम्यं न प्रदर्शनीयम्। प्रमुखानां सेवायोगानां परिगणन मवश्यं कुर्यात्। जीवनावश्यकवस्तूनां मूल्यमितिं नियन्तुं अशक्तावस्थायां सर्वकारः सर्वथा सेवायोगानां योग-क्षेमनिर्वाहाय यत्किञ्चित्कुर्याच्चेत् अवश्यं ते तृप्ता भवेयुः, अन्ततो गत्वा अन्तःक्षोभो वा निवार्येत।

देशक्षोभनिवारणाय प्रजासौकर्याय च सेवायोगैः सर्वकारेण च परस्परभावनां मनसि कृत्वा सहयोगः क्रियेत। नो चे दुभयोरपि हानिरित्येतत् प्रत्यक्षरप्रत्यक्षसत्यं भवेत्। कतिपय वर्षेभ्य एव आरभ्य इयं परिपाटी अनुसृता परिदृश्यते यत् प्रथमं कस्मिंश्चित् कार्यक्षेत्रे सेवायोगः अतृप्त कार्यबन्धे प्रवृत्तो भवति चेत् सर्वकारोपि प्रथमं भीषयित्वा अन्ततः तोषयित्वा तान् कार्यतत्परान् करोति इति। एव मेव बहुषु कार्यक्षेत्रेषु सम्प्रदायः प्रवर्तितः। इदानीं स एव दुराचारो भूत्वाऽस्मान् सर्वान् समस्तं च भारतं तुषाग्निन्यायेन दहति, यद्यपि स न ज्वलति।

अतः देशक्षेमकाङ्क्षिभिः सर्वैरपि देशक्षोभकराः संघटनाः न समर्थनीयाः इति व्रतं आस्थेयम्।

"अवरः"

# श्रीकामाक्षी सुप्रभातस्तोत्रम्

श्री के. सि. जयचन्द्रशास्त्री

श्रीमातः, श्रीमहाराज्ञि, एकाम्रेश्वरवल्लभे ।
कामाक्षि जगादाधारे, उत्तिष्ठ परमेश्वरि ।।
उत्तिष्ठोत्तिष्ठ, देवेशि, भक्तानुग्रहकारिणि ।
काञ्चीनिवासरसिके, जगतींमङ्गलं कुरु ।।

श्रीकामकोटि, करुणे, तरुणार्कवर्णे,
कामाक्षि, काञ्चिपुरवासिनि, कम्रमूर्ते ।
कम्पानदीतटविलासविहारलोले;
एकाम्रनाथदयिते तव सुप्रभातम् ।।

कामेशि कञ्जदलनेत्रि ककाररूपे;
कल्याणि कामफलदे कविलोकवन्द्ये ।
कामाक्षि कामरिपुकामिनि काव्यलोले,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

दीनावनैकनियमे यमिनां सुगम्ये,
मानातिलङ्घिमहिमे हिमशैलकन्ये ।
ज्ञानप्रदात्रि जनयित्रि सुपर्वमान्ये,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

चक्र्यादिनिर्जरगण स्तव दर्शनार्थं,
बद्धाञ्जलि र्जननि तिष्ठति कौतुकेन ।
तस्मिन् प्रसारय कृपाभरितान् कटाक्षान्,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

त्वां स्तौति नैगमवचोभि रमन्दबुद्धि:;
ब्रह्मापि सृष्टिविधिपुष्टिमवाप्तुमिच्छन् ।
संचिन्तयन् सफलतां चतुरास्यतायाः,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

श्रीशङ्करप्रथम संयमिसार्वभौमै:,
पीठाधिपै र्विमतखण्डनपण्डितै स्तैः ।
अद्वैतिभि स्सततपूजितपादपद्मे,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

इन्द्रादयोपि ककुभा मधिपाश्च देवा:,
सोपायनाः सविनया: प्रविशन्ति भक्त्या ।
सम्भाव याम्ब करुणामसृणै: कटाक्षै:,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

मन्दारकल्पहरिचन्दनपारिजात-
सन्तानसूनपरिगुम्भितमाल्यराशिम् ।
आनिन्यु रत्र विबुधप्रमदा: प्रमोदात्,
एकाम्रनाथदयिते तव सुप्रभातम् ।।

लोलालकै: सदृशतां तव लब्धुकामै:,
भृङ्गै स्त्वदङ्घ्रिसदृशस्य कुशेशयस्य ।
नून प्रदक्षिणविधि: क्रियते हि संप्र-
त्येकाम्रनाथदयिते तव सुप्रभातम् ।।

आयात्यनन्यमनसा यतिसार्वभौम:,
श्रीचन्द्रशेखरगुरू: स जयेन्द्रशिष्य: ।
पुष्पै: फलै स्सुरभिवस्तुचयैश्च भक्तै:;
कल्याणदात्रि भवता त्तव सुप्रभातम् ।।

कम्पानदीविशदवारिकृतावगाह:;
चाम्पेयपाटलजपासुमधूलिकीर्ण: ।
संसेवितुं समुपया त्यसोऽनिल स्त्वां,
एणाङ्कजेतृवदने तव सुप्रभातम् ।।

माङ्गल्यगीति रधुना बहिरङ्गणे त्व-
न्नामाङ्किता विजयते जनकर्णपेया ।
भूपालरागकलिता श्रुतितालबद्धा,
ईशानवामनयने तव सुप्रभातम् ॥

भेरीमृदङ्गनिनदः कलवेणुवीणा-
नादश्च वन्दिजनसन्नुतिपाठरावः ।
सम्मूर्छति द्विजकुलस्य च वेदघोषः;
लक्ष्मीनिषेवितपदे तव सुप्रभातम् ॥

एलालवङ्गसुमपूगफलप्रशस्तं,
कर्पूरचूर्णसुरभीकृत मम्ब तेऽद्य ।
ताम्बूळ मानयति दुग्धपयोधिकन्या,
ह्रींकाररम्यनिलये तव सुप्रभातम् ॥

प्रीत्या त्वया फलरसैः परिपोष्यमाणः,
कीर स्समुच्चरति शारिकया समेतः ।
नाम्नां सहस्रमयि हाटकपञ्जरस्थः,
हर्यश्वपूजितपदे तव सुप्रभातम् ॥

गण्डभ्रमत् भ्रमरझंकृतिरावसान्द्रं,
घींकारराव मधिकं कुरुते गजेन्द्रः ।
आकुञ्चिताग्रचरणः करलग्नपद्मः,
सर्वेशि शर्वदयिते तव सुप्रभातम् ॥

विप्रार्घ्यदानविधिनिर्जितशत्रुकूटो,
भास्वानुदेति सुकुमारतनुः कराग्रैः ।
आश्वासयन विरहिणी मथ पद्मिनीं तां,
कञ्जातपत्रनयने तव सुप्रभातम् ॥

माधुर्यतोतिमहतीं महतीं स्ववीणां,
देवो ऋषि र्जननि शारदनीरदाभः ।
प्रक्वाणय त्यतुलतावककीर्तिगीतिं;
हय्यङ्गवीनहृदये तव सुप्रभातम् ॥

त्वत्कण्ठरावविजिता भवितेति भीतेः,
आकारमात्रबृहतीं बृहतीं स्ववीणाम् ।
विश्वावसु र्नहि निनादयतीह गायन्,
लम्बोदरार्चितपदे तव सुप्रभातम् ॥

हृद्यैश्च पद्यनिचयै रनवद्यगद्यैः,
निश्शेषमेव गदितुं समभू दशक्तः ।
शेष स्त्वदीयविभवं वदनै रशेषैः;
ह्रींकारभास्कररुचे तव सुप्रभातम् ॥

स्वर्गापगाकनककोमलकञ्जषण्डा-
न्यादाय भक्तिविवशा स्तव दर्शनाय ।
आयान्ति सप्तऋषयः कृतसान्ध्यकृत्याः,
सर्वेसि ते भवतु लाकिनि सुप्रभातम ॥

प्रीत्या पयो वितरितुं निजवत्सकेभ्यः,
संच्छिद्य रज्जुमतिनिष्ठर मृद्धृतास्यम् ।
अम्बारवं प्रकुरुते भुवि धेनुयूथ,
कल्याणशैलनिलये तव सुप्रभातम् ॥

केशाग्रबन्धविलसन्नवपुष्पगुच्छाः,
चीनीशुकाः कनकभूषणभूषिताङ्गाः ।
आयान्ति भक्तिविनताः वनिताः त्वदर्थं,
लभ्येतटें शिवपरे तव सुप्रभातम् ॥

श्रेयःपदं चरमजन्मनि लभ्यमेकं
प्राप्तुं त्वदीयशुभदर्शन मम्ब नित्यम् ।
काञ्चीनिवास मभिवांच्छति भक्तलोकः,
ह्रींकारवारिधिसुधे तव सुप्रभातम् ॥

वांच्छितार्थप्रदे नित्यं सुरसंघनिषेविते ।
अन्तर्मुखसमाराध्ये कामाक्षि तव मङ्गलम् ॥

# अहो! रघुकुलस्य प्राशस्त्यम्

श्री दर्भा चलमय्यशास्त्री, पेद्दापुरम्.

समृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः, प्रत्युज्जगामातिथिमातिथेयः ॥

पुरा भारतदेशं पालयामासुः राजवंशाः बहवः । राजवंशेषु तेषु अग्रगण्यः रघुवंशः । तस्य वंशस्य सूर्यपुत्रो वैवस्वतमनुः मूलपुरुषः । अत एव सः वंशः सूर्यवंशः इति चापि प्रथां प्राप । वंशे तस्मिन् राजा दिलीपोनाम चन्द्र इव क्षीरनिधौ संजातः । आजानुबाहुः, विशालवक्षः, उन्नतस्कन्धः, मूर्तिमान् पराक्रम इव स्थितश्च सः दिलीपः । अर्णव इव रत्नैः, तेजःप्रताप-प्रभावादिभिः, कुलशीलदाक्षि-ण्यादिभिः, आश्रयणीयश्च बभूव सः दिलीपः । कुशलसारथि-प्रेषिताः रथनेमयः इव प्रजा-स्तस्य न जहुः पूर्वाभ्यासमार्गं । शौर्यमभूत्तस्य नीतिपुरस्सरमेव । तथा अभिवृद्धयर्थमेव प्रजानां करं षष्ठांशरूपं अग्रहीत् प्रजाभ्यः दिलीपः यथा सूर्यः गृह्णात्युदकं उत्स्रष्टुं सहस्रधा । मौनं पर-वृत्तान्तपरिज्ञानेऽपि, क्षमा प्रती-कारसामर्थ्येऽपि, अभावश्च श्लाघायाः सत्यपि वितरणे, वेदवेदाङ्गादीनां पारदृश्वा चाभवत् । प्राप च वृद्धत्वं, यूनोऽपि विषयवैराग्यादिज्ञानतः । व्यापारः पितृणाम् जननमात्र मेव प्रजानां । दिलीप एवाकरोत् शिक्षारक्षणादिकं तु । "अदण्डया-न्दण्डयन् राजा, दण्डयांश्चैवापि अदण्डयन्नयशो महदाप्नोति, नरकं चाधिगच्छति" इति

शास्त्रगिरां प्रमाणीकृत्य दण्ड्या-नेवादण्डयत् । तथा दुद्रोह दिलीपो भुवं, यज्ञायागादीन् कर्तुं, यथा दुद्रोह चेन्द्रः स्वर्गं सस्यवर्धनाय । यथा औषधमिव रोगी, तथा शिष्टजनं द्वेष्यमगृह्णात् । प्रियोऽपि दुष्टजनः परित्यक्तोऽभवत्तेन उरगक्षताङ्गुळीव । किमधिकेनोक्तेन? शशासानन्यशासनामुर्वीमेकपुरीमिव ।

सुदक्षिणां मगधराजपुत्रीं परिणीय यौवने वयसि अपाल-यच्च राज्यं बहुकालं । राज्ञि तस्मिन् अत्यन्तानुरक्ताः बभूवुः प्रजास्सर्वे । परन्तु भूयसाऽपि कालेन सुतमुखकमलावलोकन-सुखमलभमानस्य तस्य चित्त-मतिक्षुभितमभूत । कदाचिद्राज्य-भारं मन्त्रिष्वारोप्य, गत्वा च समीपं वसिष्ठस्य कुलगुरोः, व्यजिज्ञपच्च सभार्यया स्वव्यथां । ततः तौ दम्पती संसेवयामासतुः वसिष्ठनियोगेन कामधेनुं नन्दि-नीधेनुपुत्रीं । फलितः, गर्भवती बभूव सुदक्षिणा । पूर्णे प्रसव-समये प्रशस्तायां वेलायां सुत-मसूत सा सकललक्षणलक्षितम् । जातकर्मादिकं कृत्वा राजा दिलीपः, शुभे मुहूर्ते स्वसुतस्य 'रघु' रिति नाम चकार । शुक्ल-पक्षचन्द्र इव वृद्धिं प्राप्य, अय-मचिरेणैव कालेन यथास्वमात्म-कौशलं प्रकटयद्भिः पात्रवशा-दुपजातोत्साहैराचार्यैरुपदिश्य - मानाः सर्वाः विद्या जग्राह । क्रमेण समारूढयौवनारम्भं तं नरेन्द्रो यौवराज्यपदे प्रत्यतिष्ठि-पत । तस्य परिणयमप्यभवत् तदैव । ततः रघुः चतुरङ्गबल-समेतः दिग्विजयाय प्रतस्थे । प्रथमं शातक्रतवीम्, ततः त्रिश-ङ्कुतिलकाम्, ततो वरुणलाञ्छ-नाम्, अनन्तरं सप्तर्षिताराशबलां दिशं विजिग्ये । ततः राजधानीं प्राप्य विश्वजिद्यागमकरोत् रघुः ।

पुरा विद्याभ्यासाय गुरुकुलाः आसन् । सर्वे विद्यार्थिनः तत्र गत्वा, कारयामासुश्च विद्या-भ्यासं विनयेन । राजपुत्राः अपि तत्रैव चक्रुः विद्याभ्यासम् । ते

गुरवः अपि तान् पुत्रवात्सल्येन प्रतिफलं नापेक्षितवन्तश्च विद्यां बोधयन्ति स्म । शिष्याश्चार्पयामासुः गुरुदक्षिणां यथाशक्ति विद्याभ्यासपरिसमाप्त्यनन्तरम् । तथैव कौत्सो नाम मुनिकुमारः अपि वरतन्तुमुनिसमीपे कृत्वा विद्याभ्यासं, अभवच्च महापण्डितः तदनुग्रहविशेषेण । साम्प्रदायमनुसृत्य हि कौत्सः विद्याभ्यासानन्तरं निर्बन्धयामास गुरुं बहुधा गुरुदक्षिणायै । शिष्यनिर्बन्धेन कुपितः वरतन्तुः 'चतुर्दशविद्यानां प्रतिफलं धनं चतुर्दशकोटीः आनय' इत्याज्ञपयामास ।

ततस्तद्धनसम्पादनायागतः कौत्सः रघोस्समीपम् । रघुस्तु तदा विश्वजिद्यागे रिक्तहस्तोऽभवत् विप्रेभ्यः सर्वधन दक्षिणतया दानेन । हा ! हा ! वीतहिरण्मयत्वात् अर्घ्यादिक निधाय मृण्मयपात्रे, कौत्सं यथाकथञ्चिदर्चयामास । कौत्सस्तु अभवच्छिथिलमनोरथः मृण्मयपात्रदर्शनात् । पूजानन्तरं रघुः कुशलानुयोगादिकमेवमवोचत्कौत्सं— 'हे कुशाग्रबुद्धे ! किं गुरुस्तव कुशली ? गुरोस्तपः अन्तरायैः इन्द्रप्रेषिताप्सरशापादिभिः व्ययं नापाद्यते कश्चित् ? किं नास्त्युपप्लवः युष्माकं आश्रमपादपानां पुत्रतुल्यत्वेन संवर्धितानां श्रमापनोदकानां वायुवादिः ? कच्चित् भद्राणि तीर्थजलानि युष्माकं ? किमनपायिनी मृगीणां सन्ततिः मुनिनिवासस्थिता ? किं प्राप्ता त्वया गुरोरनुज्ञा गृहस्थाश्रमस्वीकरणाय" इति ।

ततः 'भवदागमनप्रयोजनं विदितुकामोऽस्मि' इत्युक्तवति रघौ 'गुरुकार्यार्थमहमागतः । अवशिष्टस्त्वं शोभसे नीवारकाण्ड इव । अतः यतिष्ये आर्जितुं गुर्वर्थमन्यतः' इति भणितवान् कौत्सः । रघु तमेवमवादीत्— 'हे मुनिकुमार ! कौत्स ! अयुक्तोऽयशस्करश्च त्वदन्यत्रगमनम् । ममाग्न्यगारे त्वं सोढुमर्हसि द्वित्राण्यहानि । यतिष्ये साधयितुं तव प्रयोजनम्" इति । तद्रात्रौ कुबेरं जित्वा धनमार्जितु-

कामः वसिष्ठेनाभिमन्त्रितं रथमारुह्य प्रातःकाले गन्तुमिच्छन् तत्रैव शयितवान्। अत्रान्तरे भीतस्सन् कुबेरः रघोः कोशागारमध्ये वृष्टिं हिरण्मयं अवर्षयत्। सुप्तप्रतिबुद्धः रघुः प्रातःकाले धनं सर्वं तस्मै कौत्साय प्रायच्छत्।

इत्थं त्यागस्वरूपः रघुः शाश्वतकीर्तिं सम्पादितवान्। अत एव तद्वंशः तन्नाम्ना 'रघुवंश' इति प्रसिद्धमभजत। रघुः महान् पुरुषः, शौर्यचिह्नः, त्यागनिदर्शनः, अभिमानताकर्णिणश्च। श्रीरामोऽपि रघुकुले एव आविर्भूय 'राघव' इति नाम लेभे। राघवस्तु पराक्रमशाली, पितृवाक्परिपालकः, सत्यसन्धः, एकपत्नीव्रतः, प्रजानुरञ्जकश्च। तस्य सुतौ लवकुशौ अपि धर्मसम्मतं, प्रजानुरञ्जकं च राज्यं सुचिरं पालयामासतुः। एवं रघुकुलसंजाताः राजानस्सर्वे श्लाघनीयाः, सकललोकहृदयानन्दकारिणः अभवन् इत्यत्र संशयो लवमात्रोऽपि न कर्तव्यः! अत एव "रघुकुलस्य प्राशस्त्यम् सर्वथा सर्वदा च वक्तव्यं श्रोतव्यं च खलु!"

# परबुद्धिर्विनाशाय

बोधकरत्नम्, रामायणज्योतिः, उपन्यासचक्रवर्ती,
श्री मु. वि. श्रीनिवासराघवाचार्यः.

कस्मिंश्चित् ग्रामे कोपि रजकः अवर्तत । तस्य त्रयः पुत्राः अभवन् । स च स्वभार्यया पुत्रैस्सहितः ग्रामवासिनां वस्त्राणि गृहीत्वा तानि शुद्धानि शुभ्राणि च कृत्वा तेभ्यः तानि प्रतिदिन प्रत्यर्प्य स्वजीविकां निर्वहति स्म । तस्य महान् एकोगर्दभ आसीत् । स रासभः रजकस्य वस्त्रभार उद्वहन् तस्य उपकरोति स्म । अथैकदा कार्यान्तरेण तस्य ग्रामान्तरं गन्तव्यमासीत । पचपंचाशत् वयस्क स रजकः स्वतृतीयपुत्रं गर्दभं च नीत्वा ताभ्यां सह ग्रामान्तरं प्रति प्रस्थितः । पथि किंचिद्दूरं गतवन्तं तद्रजकपुत्रं तस्य वाहनं गर्दभं वस्त्रशोधकं च वीक्ष्य मार्गे गच्छन्तः पथिकाः इत्थं आहुः – अयं तावत् वृद्धः परिश्रमी रजक इव प्रतिभाति । वाहनः खरः तूष्णीं याति । तदुपरि कोपि भारो न विद्यते । तस्य पुत्रः असावपि अल्पवयस्को बालकः । किमिति अमू पादचारिणौ गच्छतः ? तयोरन्यतरेण केनापि रासभोपरि उपविश्य न गम्यते ? इति । तेषां मार्गगतमनुष्याणां वचनमाकर्ण्य बालकः स्वपितरं वृद्धं आह – हे पितः, भवान् गर्दभोपरि उपविशतु अस्य पृष्ठे तु वस्त्रभारो अद्य नास्ति । वाहने अस्मन्निकटे विद्यमाने सति किमर्थं भवता वाहनस्य पश्चात् पद्भ्यां गम्यते? इति । तच्छ्रुत्वा रजकः गर्दभमारुह्य गच्छति स्म । बालकश्च तत्पश्चात् गच्छति स्म । अथ किंचित् दूरागमनानन्तरं इतरे केचित् पान्थाः तादृशं रजक-

कर्तृकं आलोक्य इदं अब्रुवन्– पश्यत, पश्यत वयस्याः, अयं वृद्धस्तावत् कठिनचित्तः स्वतनयं अल्पवयस्कं बालकं पादचारिणं आकलय्य स्वयं वाहनारूढः यात्रां समापयति। इति। तन्निशम्य वस्त्रशोधकः सः, गर्दभादवरुह्य स्वतनयं बालकं तदुपरि आरोपयित्वा स्वयं पादचारी गच्छति स्म। अथ किञ्चित् दूरगमनकाले अन्ये केचन यात्रिणः जनाः इत्थमूचुः – अपि भो, मित्रमणयः व्यलोकयत, व्यलोकयत, अस्य बालकस्य हृदयकाठिन्यम्। पूजनीयं महान्तं स्वपितरं अधःकृत्वा वाहनोपरि उच्चस्थाने उपविश्य अनेन गम्यते। कलियुगधर्म इव इति। तत्श्रवणानुपदं बालकस्तावत् वाहनादवरुह्य पितरं नत्वा स्वापराधक्षमापणं च अकरोत्। अथ पूर्ववत् प्रथमः रासभः, पश्चात् पिता, अथ पुत्रः इति ते त्रयः मार्गे गच्छन्ति स्म। बालकः पितरमेवमाह– पितः, भवान् तावत् वृद्धः संवृत्तः अधिकं दूरं पद्भ्यां गन्तुं असमर्थः तस्मात् वाहनमारोहतु इति पितरं प्रार्थयामास। किन्तु पिता इदं नानुमेने। पितापुत्रयोः वादविवादं शृण्वन्तः इतरे पान्थाः तावेवं अब्रुवन् – अयि भो वृद्धबालकौ! किमिति युवाभ्यां विवादः क्रियते? असौ वाहनः न शिशुः। वां वोढुं समर्थः पशुः। युवां द्वावपि वाहनं आरुह्य गच्छतम्। तदा विवादस्य अवकाशः नास्ति। इति। तन्निशम्य पिता पुत्रश्चोभौ वाहनमारुहन्तौ गच्छतः स्म। अथ किञ्चित् दूरं गतयोः तयोः अन्यं तादृशं शब्दं श्रवणपुटं अपतत्। महाजनाः पश्यत इदं अन्याय्यं वाग्वितरणानर्हं खरं तावुभौ हिंसतः स्म। असौ गर्दभस्तु वस्त्रभारं प्रतिदिनं उद्वहति। इदानीं तु मनुष्यभारं उद्वहति। प्राणिहिंसा न कर्तव्या इति नीतिः अनयोः न विद्यते वा? अयं तु सर्वभारं उद्वहति। इमं जन्तुं कः उद्वहेत्? इति अवदन्। तदाकर्ण्य पिता पुत्रश्चोभौ भूतदयापरौ भूत्वा गर्दभस्य पुरः-

पादौ पश्चात् पादौ च रज्जुना आबद्ध्य तयोः बन्धनयोर्मध्ये लगुडमेकं निक्षिप्य तस्य दण्डस्य अग्रे गृहीत्वा स्वस्कन्धे निक्षिप्य गर्दभं वहन्तौ गच्छन्तौ आस्ताम्। इत्थं गच्छतोः तयोः मध्येमार्गं अल्पः सेतुः ताभ्यां तरितव्यः आसीत्। यदा तावपि सेतोरुपरि गच्छन्तौ आस्ताम्, तदा गर्दभः स्वप्रतिबिंबं जले दृष्ट्वा तं गर्दभान्तर मत्वा तदारोहणेच्छया-उच्चैः क्रन्दति स्म। तदुच्चध्वनिं अकस्मात् निशम्य सुतरां भीतः रजकबालकः स्वदण्डकोटिं विहाय कंपितसर्वावयवः दूरं अतिष्ठत्। रजकहस्तात् भाराधिक्यात् गर्दभः जले अपतत् ममार च। किंकर्तव्यतामूढहृदयौ उभावपि रुदन्तौ स्वजीविकायामपि कलंकं प्राप्तवन्तौ रासभनष्टौ "परबुद्धिर्विनाशाय" इति वदन्तौ ग्रामं ईयतुः।

उच्यते च –

"आत्मबुद्धिस्सुखायैव
गुरुबुद्धिर्विशेषतः।
परबुद्धिर्विनाशाय
स्त्रीबुद्धिःप्रलयावहा।"

## गांधीकथा

रचयिता– विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

गान्धीमहोदयः सत्यश्रद्धवान् अहिंसासक्तः, सुतरां दैवभक्तश्च। अत एव "महात्मा" इत्युपाधिस्तमनवरतं शोभते स्म। 'राष्ट्रपिता' इत्यपि तमेव महात्मानं सम्बोधयन्ति विश्वस्मिन् जना आदरेण।

जनकः केवलं गृहे निजे स्वीयानेव तनजातान् प्रेम्णा पालयति। पोषयति वा। तेषां दुःखस्य दूरीकरणाय सुखस्योत्पादनाय सततं यतते च सः। असौ तु महात्मा न तथा, राष्ट्रीयाः सर्वा अपि प्रजा स्तस्य सन्तानाः। सर्वदा

कायेन मनसा वाचा भारतीयानां सेवार्थं तद्गोत्रादि विचारं विना सिद्धो भवति स्मायं गांधीमहोदयः राष्ट्रपिता ।

प्रत्यहं सायं राष्ट्रपिता वायुसेवनार्थं सुदूरं गच्छति स्म । एषा क्रिया दैनन्दिनो नियम मासीत् तस्य ।

एकदा यथानियमं संध्यायां महाबलेश्वरग्रामाद्बहिः महात्माऽनुयायिभि स्साकं जगाम । यदाकदा वा तदानीं जनाः मार्गे तस्य महात्मनः दर्शनलाभार्थं उपतिष्ठन्ते स्म । दिने चैकस्मिन् एको बालकः द्वादशवर्षीयः जात्या पञ्चमः महात्मनो दर्शनार्थं सायमुपगतः । तस्य वेषभूषादिना प्रतिभाति स्मायं ग्रामीणः पौगण्डः तीव्रोऽकिञ्चन इति । कटौ कौपीनमेकम्, स्कन्धे जीर्णवस्त्रखण्ड एकः, सोपि नितरां अशुद्धः । देहोपि मलिनः घोषयतिस्म स्नात्वास्य बहूनि दिनान्यतीतानीति । तं दृष्ट्वा गांधी केनचित्स्वनुयायिना साकं अवदत्" बालकस्य जीर्णं वस्त्रमानय । परेद्युः तत् प्रति निवर्त्यंत इति विश्वासमपि देहि" इति ।

परदिने सायं पर्यटनाय जिगमिषुर्महात्मा "प्यारेलाल" आत्मनः कार्यदर्शिनं प्रति "खादीवस्त्रखण्डमेकं वस्त्रक्षालक (Soap) खण्डेन साकं गृहीत्वा मया सहागच्छतु"इति अज्ञापयामास । आदेशमनुसृत्य सः महात्मानं अनुययौ । बालकः राष्ट्रपितरं पथि निरीक्षते स्म । प्रेम्णातमङ्के उपवेश्य तस्य शीर्षे करं सञ्चालयन् गांधी तमाश्वासयामास "बाल ! गृहाण चेलखण्डमेतत । अयमपि क्षालकखण्डः त्वदर्थ मेव । श्व स्नात्वा, शुचिः भूत्वा वस्त्राणि क्षालयित्वा अत्रागच्छ । मधुराणि भक्ष्याणि लभ्यन्त" इति । उपदेशेन मधुरतमेण व्यवहारेण बहुधा नसन्तुष्टः प्रतिदिनं सर्वथा शुचिर्भूत्वा निजै. ग्रामीणैः सुहृद्भिः बालकैः सह राष्ट्रपितुः दर्शनसौभाग्यं लभते स्म ।

# केन्द्रीय संस्कृतविद्यापीठविद्वत्संघस्य उद्घाटन महोत्सवः

केन्द्रीय संस्कृतविद्यापीठस्य चेयरमैनमहोदयस्य पण्डितवरेण्यस्य श्री यम्. अनन्तशयनं अय्यंगार् महोदयस्य अभिभाषणम्—

अयि भो! पण्डितवर्याः! सभासदश्च! सर्वेभ्यः सुस्वागतम्। संपूर्णभारतदेशे केन्द्रीय सम्कृतविद्यापीठानि पञ्च स्थापितानि भवन्ति। अस्माकं पीठं प्रप्रथमं द्वादशवर्षातपूर्वं स्थापितम्। अस्मिन् त्रयः त्रिभागाः सन्ति। शिक्षाविभागः, विमर्शोविभागः, साहित्यशास्त्रविभागश्च इति। यथा नवीनपाठशालासु प्रारम्भदशातः आरभ्य आंग्लभाषायां, देशभाषायां वा एव छात्राः, अध्यापकाश्च परस्पर वार्तालापं कर्तुं भाषण प्रदातुं च समर्था सन्ति, तथैव अत्रापि संस्थासु च सर्वे परस्परं वार्तालापं, भाषणं, व्यवहारं च संस्कृतेनैव कर्तुं कुशलाः भवेयुः। तेषां छात्राणां अभ्यासार्थं इयं सभा स्थापिता। अयमेव अस्याः सभायाः मुख्योद्देश्यः इति मन्ये। प्रतिसप्ताहे वा पक्षे वा सभायाः समावेशः कर्तव्यः। तस्मिन् परस्परं संभाषितुं संपूर्ण अवकाशः छात्रेभ्यः दातव्यः। केवलं छात्राणां, बोधकानां च उपयोगार्थमेव इयं सभा न प्रचलितव्या। अन्येषां कर्मचारिणां च उपयोगार्थमपि अनया सभया यत्नः कार्यः इति आशास्महे। ये ये पुरुषाः, स्त्रियश्च अस्मिन् विद्यापीठे कार्यं कुर्वन्ति ते सर्वे संस्कृतभाषायां परिचिताः भवेयुरिति। इतःपरं अस्माकं विद्यापीठस्य व्यावहारिकभाषापि संस्कृतमेव भवेत्। अमुं उद्देश्यमनुसृत्य वयोऽधिकानां प्रशिक्षणार्थं संस्कृतपाठशाला अत्र एका स्थापिता। तस्यां प्रतिदिनं सायकालसमये पञ्चाशत् सख्याकाः मध्यतर वयस्काः संस्कृतभाषां पठन्ति।

यथा उत्तरभारते द्वौ संस्कृत-विश्वविद्यालयौ स्थः तथैव दक्षिणभारते एकः विश्वविद्यालयः केन्द्रप्रभुत्वेनैव स्थापितव्यः। अनेन उद्देश्येन इदं विद्यापीठं स्थापितम् कालक्रमेण विश्वविद्यालयः भविष्यति इति आशास्महे। परन्तु अद्यापि एतस्मिन् विषये पर्याप्तः प्रयत्नः केन्द्रप्रभुत्वेन न कृतः एक सौध निर्माणं विना। आन्ध्रप्रभुत्वै भूतपूर्वं मुख्यमन्त्रिणा अस्मिन् विषये बहुप्रयत्नः कृतः। शीघ्रमेव एका विश्वविद्यालया अस्मिन् प्रदेशे स्थापितो भविष्यति इति आशास्महे।

इदानीं श्रीमान् स्वामिनाथन् महोदयः सभायाः प्रारम्भदिवसे "वैखानसशास्त्रकोश" सम्बन्धि भाषणं कर्तुं कृपया अङ्गीकृतवन्तः अतः तानहं प्रार्थये भाषणं दीयतामिति। अत्र उपस्थिताः सर्वेऽपि सावधानेन शृण्वन्तु तस्य संभाषणं इति प्रार्थ्य विरमामि।

## हैदराबाद नगरस्य सुरभारतीसमिति चतुर्थ वार्षिकोत्सवः

वर्षचतुष्टयात् पूर्वं भाग्यनगर्यां (हैदराबादनगरे) कैश्चित् संस्कृतप्रणयिभिः कृतप्रारम्भायाः सुरभारतीसमित्याः, संस्कृतभाषाप्रचारे बद्धकक्षायाः, चतुर्थो वार्षिकोत्सवः मे मासस्य १९ तमे दिवसे आन्ध्रप्रदेश देवालयादाय सचिवस्य श्री 'राजा' सागि सूर्यनारायणराजु महोदयस्याध्यक्षतायां प्रचलत्। डा. चिन्तामणि देशमुखमहोदयाः उस्मानियाविश्वविद्यालयपालैः रुदयं सुरभारतीसमित्यै दत्तायां भुवि समित्याः भवनार्थं आधारशिलां न्यक्षिपन्। तस्मिन्नवसरे समित्या सम्पादितं स्मारकग्रन्थं आं. प्र. साहित्य अकाडमी कार्यदर्शिनः श्री देवुलपल्लि रामानुजराव् महोदयाः प्राचीकरन्। श्रीमती वि. अनसूया 'कालिदासे वाल्मीकेः प्रभावः' इति विषयमधिकृत्य उपन्यास्थत्।

प्रसिद्ध संस्कृतपण्डिताः श्री शठगोपरामानुजस्वामि महोदयाः अस्मिन्नवसरे समित्याशङ्खेन ११६/- मित रूप्यकैश्च संमानिताः। •••

**कवयिता श्री यन्. रामनाथार्यः.**

[पूर्वानुबन्धः]

यस्सततं परिपृच्छति शृणोति संधारयत्यनिशम् ।
तस्य दिवाकरकिरणैः नलिनीव विवर्धते बुद्धिः ॥

The intellect of a person who constantly seeks advice from others by questioning them, hears the advice (expands) given to him, and ponders over constantly on what he has heard, like the petals of the lotus by the sun's rays.

बधिरयति कर्णविवरं वाचं मूकयति नयन मन्धयति ।
विकृतयति गात्रयष्टिं सम्पद्रोगोऽयमद्भुतो गजन् !

Strange indeed is this desease viz possession of abundant wealth It causes deafness in the ears (ie not hearing the words of suppliants, blindness in the eyes (ie not seeing the distressed), and disfiguration of the body (ie change of colour at the approach of the needy).

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवल माकारतो भेदः ॥

The difference between a miser and a sword is only in appearance (but there are many similarities between them). The one is close fisted

and the other is firmly held by the fist; the one sits guarding his treasury and the other is in its sheath (Kosa) and both are generally dirty in appearance.

तृणादपि लघुस्तूलः तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचये दिति ॥

Cotton is lighter than straw and a beggar is lighter, that is, worse than the straw. He is not blown away by the wind thinking probably that he would beg even the wind.

दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ?

Even the sun loses his brightness when he is moving towards the south with his rays stretched forward. What about others? Similarly, a person who goes begging (Dahshinasa) with stretched arms (Prasarithakara), loses his reputation.

आरोग्य विद्वत्ता मज्जनमैत्री महाकुले जन्म ।
स्वाधीनता च पुंसां महदैश्वर्यं विनाऽप्यर्थम् ॥

Even without being prosperous they should be deemed really rich, who are healthy, well read, associating with greatmen, born in great family and are not depending on others.

(अनुवर्तते)

# संस्कृतभाषाप्रचारिणीसभा, चित्तूरु.

## आनन्द - उत्तरायणपरीक्षा फलितांशः

# Samskritha Bhasha Pracharini Sabha,

## CHITTOOR A. P.

RESULTS OF MARCH EXAMINATIONS 1974.

The following are the Register Numbers of successful Candidates who appeared for the Samskrita Examination, held on 9th, 10th and 11th March, 1974.

### PARICHAYA

I Class:- 37 95 114 116 118 120 122
124 208 209 227 282 396 493 505 514 516
517 519 612 613 632 636 663 664 668 671
729 730 733 734 736 767 783 784 789 815
919 920 940 943 990 991 992 997 998 1002
1003 1018 and 1145.

II Class:- 3 21 26 58 60 61 91
94 96 97 100 101 102 110 111 112
113 115 117 119 121 123 152 154 176
181 189 192 210 212 213 214 218 225

229 230 232 235 237 239 241 242 250
251 255 256 257 267 278 279 284 285
288 289 290 293 294 297 306 309 314
361 362 370 373 374 378 379 380 382
383 386 390 404 405 407 429 485 492
504 515 518 521 523 526 530 541 588
589 592 593 596 598 599 600 602 603
606 607 608 609 610 611 614 615 628
630 635 639 642 645 649 650 651 652
653 654 655 656 657 658 660 661 666
669 672 673 690 692 693 694 708 712
728 731 735 765 790 791 792 800 801
811 812 813 814 816 817 819 822 829
830 831 832 833 838 839 844 845 870
877 884 894 896 897 898 912 929 930
932 941 942 944 946 947 964 965 967
969 989 994 999 1000 1001 1005 1019 1022
1023 1031 1052 1053 1067 1109 1114 1115 1146
1151 and 1152.

III Class:- 1 2 4 11 15 16 17
19 22 23 24 25 27 28 29 49
63 65 69 70 90 92 105 129 132
135 136 144 145 146 147 149 150 155
159 174 175 183 184 185 186 187 188
191 193 194 211 226 228 240 243 244
245 247 248 252 253 254 271 272 274
276 277 280 281 283 286 287 291 295
296 298 300 301 302 303 304 305 307
308 310 312 313 315 316 317 319 371

872 875 376 377 381 384 385 387 389
391 392 393 394 397 403 409 412 413
415 418 419 422 423 481 482 487 503
506 508 509 524 531 533 534 539 540
542 548 590 591 604 605 625 629 637
643 644 659 662 665 670 691 709 710
711 713 717 718 719 720 721 722 732
737 752 753 754 757 766 785 786 787
802 804 805 818 820 821 823 834 835
836 837 841 842 843 850 851 853 872
875 876 882 883 885 883 887 893 893
895 915 916 917 918 933 934 935 937
938 945 968 970 971 972 973 974 975
977 1020 1024 1026 1027 1028 1030 1051 1054
1055 1060 1061 1065 1069 1097 1098 1099 1100
1103 1105 1106 1107 1112 1113 1116 1122 1123
1124 1125 1126 1127 1128 1129 1130 1132 1133
1134 1137 1139 1140 1144 1150 and 1159.

## ABHIJNA

I Class:- 42 125 126 207 231 260 322
553 697 921 954 1006 1008 and 1010.

II Class:- 40 82 161 167 195 198 206
221 324 334 338 363 440 441 444 447
451 550 552 554 556 562 617 618 619
620 621 679 680 700 741 742 761 769
771 773 825 826 827 828 857 859 900
902 918 952 976 978 981 985 936 1007
1009 1053 1087 1079 1083 1085 1089 and 1160.

III Class:- 81 98 160 165 166 197 199
200 201 202 204 205 222 265 320 321
323 325 326 327 328 330 331 332 333
336 337 435 436 437 438 439 442 445
446 449 450 452 453 455 456 501 551
557 559 560 561 564 566 675 676 678
696 738 739 740 760 762 763 768 770
772 824 858 860 878 889 891 948 951
953 958 960 962 984 1032 1035 1036 1080
1081 1084 1086 1087 1153 and 1154.

## VICHAKSHANA

I Class:- 577 and 797.

II Class:- 35 83 340 344 345 346 347
567 576 579 622 623 682 687 703 715
745 749 774 798 924 1011 1012 1013 and
1094.

III Class:- 30 31 33 34 36 343 350
360 364 464 569 571 578 580 624 683
684 685 686 701 702 704 706 723 743
744 746 747 748 776 777 846 854 855
862 873 904 905 906 907 908 909 910
911 925 926 1015 1016 1091 1092 1095 and
1142.

## SAMARTHA

I Class:- 707 only.
II Class:- 5 7 and 773.
III Class:- 84 127 751 864 866 868 and
1157.

I Part only:- 465 466 467 468 469 470 471 472 473 475 476 477 478 479 480 750 and 779.

II Part only:- 85 351 352 353 354 582 1042 1043 1045 and 1046.

## KOVIDA

I Class:- Nil.
II Class:- 54 56 and 1017.
III Class:- Nil.

First Part only:- 367 586 587 and 799.
Second Part only:- 8 57 355 and 584.
Third Part only:- 586 and 587.
Fourth & Fifth Part only:- 88 only.
Fifth Part only:- 86 87 366 368 369 and 781.

The following candidates stood First in I Class in the Examinations mentioned below. Prizes will be awarded to them in due course.

PARICHAYA:- No. 998 R. Vijayalakshmi, Srirangam.
ABHIJNA:- No. 1008 S. R. Ranganathan, Srirangam.

VICHAKSHANA:- No. 577 S. Uma, Madras-17.
SAMARTHA:- No. 707 M. Sivaganesha Babu,
Peddapuram. (A. P.)

# आनन्द – उत्तरायणपरीक्षासु उपयुक्तानि केन्द्राणि

(१) अनन्तपुरम् (२) अमरापुरम् (३) आल्लगड्डा (४) इन्द्रप्रस्थः (५) कडपा (६) कन्दुकूरु (७) काकिनाडा (८) कुम्भकोणम् (९) कोत्तपेट (१०) कोयंब्रतूरु – बी. (११) क्रोंपेट (१२) गुण्टूरु (१३) गोपिचेट्टिपालयम् (१४) चित्तूरु (१५) जग्गम्पेट (१६) तंजावूरु (१७) ताडेपल्लिगूडेम् (१८) तिरुवेंगाडु (१९) तिरुपति (२०) त्यागरायनगर् (२१) दोम्मरनन्द्याला (२२) नन्दिकोट्कूरु (२३) नेल्लूरु (२४) ताण्डूरु (२५) पिठापुरम् (२६) पेद्दापुरम् (२७) प्रोद्दुटूरु (२८) भीमवरम् (२९) बेंगलूरु (३०) मन्त्रालयम् (३१) मदनपल्ली (३२) मधुरै – ए. (३३) मधुरै – बि. (३४) मन्नार्गुडि (३५) माधवरम् (३६) मुत्यालंपाडु (३७) मुक्कामला (३८) मोडेकुर्रु (३९) राजमण्ड्री (४०) लेपाक्षी (४१) वड्डवूरु (४२) विल्लुपुरम् (४३) विजयवाडा (४४) विजयनगरम् (४५) श्रीकाकुलम् (४६) श्रीरङ्गम् (४७) सेलम् (४८) हिन्दूपुरम् (४९) हैदराबाद (५०) मचिलीपट्टणम्.

# आनन्द - उत्तरायणपरी ।फलसारिणी

## उत्तीर्णाः 749

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | प्रथमश्रेणी | द्वितीयश्रेणी | तृतीयश्रेणी | खंडशः |
|---|---|---|---|---|---|---|
| परिचयः | 729 | 497 | 50 | 198 | 249 | |
| अभिज्ञः | 236 | 159 | 14 | 60 | 85 | |
| विचक्षणः | 114 | 79 | 2 | 25 | 52 | |
| समर्थः | 51 | 11 | 1 | 3 | 7 | 27 |
| कोविदः | 30 | 3 | — | 3 | — | |
| | 1160 | 749 | 67 | 259 | 393 | |

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.
11—6—74

को. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# सुरभारती – सोमैया संस्कृतकेन्द्र

मुम्बापुरीस्थाः संस्कृतानुरागिणः श्रीमान्कर्मसिंह जे. सोमैयाश्रेष्ठिनः तथा तेषां अभिज्ञातकुलशीलोपपन्नाः अखिलभारतीय उत्पादक संघटनायाः माननीयाः अध्यक्षाः श्रीमन्तः शान्तिलालक, सोमैयाश्रेष्ठिनः एतेषां दातृत्वशीलत्वेन समुपपन्नः "सोमैया-विश्वस्तनिधिः"। सत्सु अपि विविधेषु अन्येषु कार्येषु "सुरभारती - सोमैया संस्कृतकेन्द्राणि" निधिसञ्चालितानि महाराष्ट्र-गोवाप्रदेशयोः अधुना पञ्चाशत्संख्याकाणि संस्थापितानि सन्ति। प्रतिमासं एकवारं नियततिथौ नियतविषयमनुसृत्य व्याख्यान-चर्चायुक्तः कार्यक्रमः गीर्वाणवाण्यामेव भवति। तत्र प्रतिकेन्द्रं प्रतिसंवत्सरं केन्द्रकार्यदर्शितां मानधनं, केन्द्रसंचालकसंस्थायाः कृते ग्रंथदानं तथा डाकव्ययं कृते विश्वस्तनिधिद्वारा अनुदानं दीयते। अपरं च पठण - लेखनवाचन-भाषण-अभिनय-समस्यापूरणादिकाः अनेकाः स्पर्धाः आयोजयितव्याः। तासां मध्ये एका स्पर्धा विश्वस्तनिधिना पारितोषिकार्हा संमता भवति। केन्द्रेण संस्कृतपरीक्षाणां कार्यं संचाल्य गीताजयन्ति - संस्कृतदिन-व्यासपूजादयः दिनविशेषाः अपि संयोगतियाः भवन्ति।

महाराष्ट्र - गोवाप्रदेशयोः प्रसृता एषा योजना अन्येषु अपि प्रदेशेषु विस्तारतां यास्यति आगामिनि काले अचिरादेव इति दृढविश्वासः वर्तते।

संकेतस्थानम्– श्री कार्यदर्शी, "सुरभारती - सोमैया संस्कृतकेन्द्र" गोदावरी शुगर मिल्स, फाझलभाय बिल्डिंग, म० गांधी पथः, मुंबई-१.

इमं प्रबोधं श्रुत्वा कश्चिन्मूर्खः गृहं गच्छन् पार्श्वस्थ मपृच्छत्– देवो जीवरूपेण सर्वत्र वर्तत इति खलु शंकराचार्यैः प्रोक्तम्। एवं चेत् व्याघ्रेऽपि देवोस्तीति किल सिद्धयति।

"आमस्तीत्येव सिद्धयति, तत्र कः संशयः।"

"तथा सति यदि कश्चिद्व्याघ्रः अभिमुखो भवति तदाऽस्माभिः न भेतव्यं, न पलायितव्यं वा इत्युक्तं भवति।"

"उक्तं भवति वा? पलायनं चेन्न भवेत् तर्हि शार्दूलः प्रहृत्य भक्षयेत्।"

"नैव भक्षयेत्। कुत इति चेत् व्याघ्रे मय्यपि च एक एव हि देवोऽस्ति! देवः कथं देवं भक्षयेत्?"

द्वितीयः पूर्वस्मै मूर्खाय समीचीनं समाधानं वक्तुं न पारयति स्म। मूर्खः स्वीयवादचातुर्येण द्वितीयं मूक मकरवं किलेति सन्तुष्टः।

अत्रान्तरे तयोः घण्टारावः कर्णपथं गतः। काञ्चीपुराधीश्वरस्य भद्रगजस्य गलावलम्बि घण्टारवस्सः। हस्तिपकः तं मत्तेभं जलक्रीडायै तटाकं नयति स्म। गजघण्टारवश्रवणमात्रेणैव वीथ्यां गच्छन्तो जनाः सर्वे पार्श्वं गताः जागरूकाः स्थिताः। परन्तु स मूर्ख स्ताव त्तथैव मध्येमार्गं स्थाणुरासीत्। हस्तिपकः तं दृष्ट्वा बधिरं मत्वा "अपेहि, अपेहि" इत्युच्चै राक्रोशत्।

"अयं गजः देवः; अह मपि देवः; देवस्य देवा द्भयं कथं? सर्वं खल्विदं ब्रह्म!" इति वदन् स मूर्खः तथैव मार्गमध्ये तस्थौ।

मदगजः सहसा आगतः मार्गमध्ये स्थितं मूर्खं शुण्डादण्डेनोत्क्षिप्य दूरतः प्रक्षिप्य निजमार्गं गतः। उत्क्षिप्त - प्रक्षिप्तः मूर्खः प्रस्थरराशिं गतः क्षतगात्रो बभूव।

सह शिष्यैः तमेव मार्गं मागतैः शङ्करभगवत्पादैः तत्रत्यं जनसमूहं दृष्ट्वा पृष्टं "कि मासीदिति"। विदितवृत्तान्तः आचार्यः

"आगच्छति गजे, मार्गादनपेतः कुतः स्थाणुर्नां गतो भवा"निति तं मूर्खं पप्रच्छ । सोऽपि सव्यथं आर्तध्वनिं कुर्वन् कारणमब्रवीत्— "स्वामिन् ! अयं गजो ब्रह्म, अहमपि ब्रह्म, सत्येवं, ब्रह्मीभूतस्य मे तत्तादृशादेव गजात् अपचारः कथं समभवत् ?" इति ।

शंकराचार्यः मन्दं मन्दं हसन्नाह "अयि ! त्वं ब्रह्मणो वाक्य मश्रुत्वा अपराध मकरोः । अत स्तवेयं शिक्षा, अयं दण्डोऽभवत् ।" इति ।

"स्वामिन् ! ब्रह्मणो वाक्यस्य अश्रवणमिति कथं ?"

शंकराचार्यः— "त्वं यथा ब्रह्मासि गज इव तथैव हस्तिपकोऽपि खलु ब्रह्म ! स त्वामुपदिदेश किल दूरं गच्छेति ! तद्वाक्यं नैव श्रुतं किल त्वया ! तस्मादेव अपचारात् तवाऽयं दण्डः !" इत्याह ।

तच्छ्रुत्वा सः "वास्तव मेतत् ! स्वामिन् ! ममैवाय मपराधः मदमत्तस्य, न तु मदगजस्य" इत्यङ्गीचकार ।

शङ्करः— "वत्स ! सर्वेऽपि प्राणिनः भगवत्स्वरूपाण्येव इति कथने अयमाशयः यत् सर्वत्र भगवत्साक्षात्कारं कुर्यादिति । सर्वत्र, सर्वप्राणिषु, भगवानस्तीति, बुद्धया तत्र सर्वत्राऽपि समभावं समदृष्टिं च प्राप्नुयादिति तात्पर्यम् ।" इत्येवमादि बहुविधमुक्त्वा तस्य ज्ञानोदय मकार्षीत् ।

## २५. क्रकचः

काञ्चीपुरात् सशिष्यः शङ्करः सुधन्वनृपतिं पुरोधाय कर्नाटदेशं जगाम । तं देशं क्रकचोनाम कापालिकः पालयन्नास्त ।

सः शङ्करागमनं श्रुत्वा "अनेन सह वादो न कर्तव्यः, बलादेव शङ्करेण कापालिकमतस्वीकारः कारयितव्यः । ततः अद्य यावत् अनेन वादजिताः सर्वेऽपि सन्तुष्टाः श्लाघेरन् मा"मित्यालोच्य निजकरधृते कपाले मद्यमापूर्य, तद्भैरवाय निवेद्य, तदर्धं स्वयमापीय, अवशिष्टार्धं गृहीत्वा शङ्करमुपागच्छत् ।

शङ्करः करेणैकेन त्रिशूलं अन्येन च मद्यार्धपूर्णं कपालं च धृत्वाऽऽगतं क्रकचं दृष्ट्वा "कोऽसि? किं निमित्तमागतोऽसि? मया ते किं प्रयोजनं" इति पप्रच्छ।

कापालिकः-- "किं न जानीषेऽहं क्रकचभूपाल इति? अदो मदीयकरस्थ मिदं मद्यं सेव्यताम्। भैरवं समर्चय। त्वदीयं तुच्छं मतं त्यज" इति वदन् शङ्करमभ्यगच्छत्। सुधन्वनृपालः अन्तरागत्य अन्तरायो बभूव। स क्रकचं स्वकर्कशहस्तेन गलहस्तिकया निष्कासयामास। क्रकचः कोपाविष्टः स्वसैन्य मानाय्य सशिष्यगणं शङ्करं हन्तु माज्ञापयत्।

कापालिकसैन्यालोकनमात्रेण शङ्करशिष्याः भयभ्रान्ताः। "वादवीरा एव वयं न तु युद्धवीराः; अतो रक्ष्याः स्मः" इति ते आचार्यं शरणं गताः। कृपालु राचार्यः अग्निदेवं मनसा दध्यौ। ज्वालामालाकुलो भगवानग्निः कापालिकसैन्यं परितः परिक्रम्य नाशयति स्म।

क्रकचः क्रोधारुणितनेत्रः स्वमन्त्रशक्ति प्रयोज्य भैरवं साक्षाच्चकार, शङ्करं हन्तुं तमचोदयत्। स तु उग्रभैरवः स्वीयावतारविशेषं शङ्करं यदाऽपश्यत् तदैव परावृत्य क्रकच मभिद्रुत्य – "किमरे! मूर्ख! तादृशं महनीयं हिंसितुं प्रेषयित्वा मामपि मूर्खयसि किल! आसीत्तवायुष्काल स्समाप्तः" इति महता कोपेन तच्छिरः चिच्छेद; अथान्तर्दधे।

## २६. चार्वाकादिमतस्थाः

अथ शङ्कराचार्यः चार्वाक-बौद्ध-जैन-क्षपणकादि मतस्थान् बहून् पण्डितान् वादे विजित्य तेषां सत्यमार्गं प्रदर्श्य कर्नाटदेशं विहायअनुमल्लनगरं गतः।

तत्रत्याः श्वमतस्थाः श्वानं पूजयन्ति। आचार्यः विंशतिदिनानि तत्र स्थित्वा तेभ्यः अद्वैतमतं प्रबोधयामास।

ततस्स आचार्यः रुरुन्धम ग्रामे विद्यमानान् विष्वक्सेनमतस्थान्, मागधनगरे वर्तमानान् इन्द्रकुबेरमतस्थान्, यमप्रस्थपुरे स्थितान् यममतस्थान्, प्रयागवासिनो वायुवरुणमतस्थान् अन्यांश्च तत्तन्मतस्थान् तत्र तत्र वर्तमानान् वादे विजित्य स्वीय मद्वैततत्त्वं तेभ्यः सर्वेभ्यो बोधयामास ।

प्रयागक्षेत्रे विराजमानसमये "आकाशमेव ब्रह्म" इति शून्यवादिनः स्वमतप्राशस्त्यं उपन्यसन्तः शङ्कराचार्येण वादे विजिताः ।

वराह - सांख्य - कापिलाणुक - शेष - चन्द्र-पितृमतस्थाना मपि अद्वैततत्त्वं प्रबोध्य शङ्करः प्रयागक्षेत्राद्विनिर्गत्य पश्चिमतीरस्थं गोकर्णं गतः ।

गोकर्णे नीलकण्ठो नाम महान् पण्डितः आसीत् । सः व्यासकृत ब्रह्मसूत्राणां शिवपरत्वेन भाष्यं रचयामास । तेन सह शङ्करस्य वादोऽभवत् ।

शङ्करः– नीलकण्ठमहोदय ! महापण्डितो भवान् । शिवः सर्वोत्तम इति भ्रान्त्या शिवपरं भाष्यं रचितं त्वया । मया विरचितं भाष्यं सकृत्पठ्यताम् । ततः स्वाभिप्रायं वक्तुमर्हसि" इत्याह ।

नीलकण्ठपण्डितः सत्यान्वेषणदृष्टया शङ्करभाष्यं पठित्वा प्राह– "महात्मन् ! मद्रचित भाष्यं न समीचीनं; अतस्तत्त्यज्यते" इति ।

गोकर्णात् शङ्करः उज्जयिनीनगरं गत्वा तत्रत्येन भट्टभास्करनामकेन महापण्डितेन सह वाक्यार्थविचारं कृत्वा तस्य स्वमते विश्वास मुत्पादयामास ।

### २७. गजो मिथ्या – पलायन मपि मिथ्या

शङ्कर भगवत्पादाः यदा उज्जयिन्यां विराजमाना आसन्, तदा विचित्र घटना काचिद्घटिता ।

# विज्ञप्तिः

अयि भो संस्कृताभिमानिनः !

चित्तूरु नगरस्थ संस्कृतभाषाप्रचारिणी सभायाः असंपूर्ण - भवननिर्माणाय भवननिधि - सहायार्थं संस्कृताभिमानिनः धर्मकर्तारः धनसाहाय्यं कुर्वन्तु इति सविनयं संप्रार्थये ।

| | | |
|---|---|---|
| संस्थापकः | – | १११६–०० |
| उद्धारकः | – | ५००–०० |
| अभिवर्धकः | – | ११६–०० |
| परिपोषकः | – | ५०–०० |
| पोषकः | – | २५–०० |

पत्रव्यवहार सङ्केतः–

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आं. प्र.)

R. N. 1845/60. Postal C. T. R. N.
भान्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका

हस्तपादविहीनोऽपि लोकं चरति नित्यशः,
वक्राभावोऽपि विषयान् ब्रवीति सुलभं नृणाम् ॥

**(Post - Card)**

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor (A. P.) C. 1500.